# गोभिल-गृह्यसूत्रम् ।

गृह्यासङ्ग्रह-श्राद्धकल्प-तत्परिशिष्ट-सन्ध्यासूत्र-स्नानसूत्र-

तत्परिशिष्टसहितम् ।



श्रीचन्द्रकान्ततर्कालङ्कारकृतभाष्यसहितम्

तेनैव परिशोधितम् ।

---

श्रीलश्री

वङ्गदेशीयासियातिकसोसाइत्याख्यसमाजानामनुमत्या

व्ययेन च

---


कलिकाताराजधान्यां

वाप्टिस्तमिसनयन्त्रे

मुद्रितम् ।

शाकाः १८०२ ।

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, Nos. 229, 241, 246, 277, 300, 346, 383, 415, 416, 423, 425, 448.



THE

# GOBHILI'YA GṚIHYA SU'TRA,

WITH A

COMMENTARY BY THE EDITOR.

EDITED BY

CHANDRAKA'NTA TARKA'LAṄKA'RA.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

1880.




# गृह्यसूत्राणामकारादिक्रमेण सूची।

## प

## र



## ल



## व

## श

गृह्यसूत्रसूची समाप्ता।

# अथ श्राद्धसूत्रसूची ।

## ग्रन्थसूची ।



ग्रन्थसूची समाप्ता ।

# गृह्यसूत्राणामकारादिक्रमेण विषयसूची ।

---

## आ



---

## इ



---

विषयः । पृष्ठाङ्काः ।

ई



---

उ



---

ऋ



---

विषयः । पृष्ठाङ्काः ।

## क



---

## ग



---

## च



---

विषयः । पृष्ठाङ्काः ।

## ज



---

## द



---

## ध



---

## न



---

## प

---

## ब



---

## भ



---

## म

---

## श



---

## स

गृह्यसूत्राणां विषयसूची समाप्ता ।

# गृह्यासंग्रहस्याकारादिक्रमेण विषयसूची ।







---

## आ

विषयः । पृष्ठाङ्काः ।

गृह्यासंग्रहसूची समाप्ता ।

---



# श्राद्धसूत्राणामकारादिक्रमेण विषयसूची ।

श्राद्धसूत्रसूची समाप्ता ।

# विज्ञप्तिः।

गोभिलसूत्रमेतदतिप्राचीनमत्यन्तप्रयोजनीयं दुष्प्राप्यञ्च श्रीमदासियातिकसमाजस्यानुमत्या व्ययेन च मुद्रितमभूत्। तदत्र, गृह्यसूत्रं, गृह्यासंग्रहनामकं गृह्यपरिशिष्टं, श्राद्धकल्पनामधेयं श्राद्धसूत्रं, तत्परिशिष्टं, सन्ध्यासूत्रं, स्नानसूत्रं, तत्परिशिष्टञ्चेति सप्त ग्रन्था मुद्रिताः। तत्राद्यं ग्रन्थत्रयं सभाष्यं मुद्रितं शिष्टं ग्रन्थचतुष्कन्तु मूलमात्रं। प्रथमग्रन्थत्रयभाष्येन पुस्तकस्य गुरुकलेवरता जातेति समाजाध्यक्षैः पराचीनग्रन्थचतुष्कस्य मूलमात्रस्यैव मुद्रणमन्वमोदि। छन्दोगपरिशिष्टापरनामधेयस्य कर्म्मप्रदीपस्य गोभिलपरिशिष्टस्यावश्यमुद्रणीयस्याप्यत्रामुद्रणे तदेव वीजं।

तदस्य गोभिलसूत्रस्याभ्यर्हिततया दुष्प्राप्यतया च मुद्रणं स्थिरीकृत्य तत्शोधनमुद्रणार्थं मामुक्तसभा नियुक्तवती। ग्रन्थस्यातिकठिनतया च व्याख्यासहितस्यैव तस्य मुद्रणं सभा निरदिक्षत्। ततश्च यतमानापि संसन्नैतस्य कामपि व्याख्यां महतापि कालेनासादितवती। अस्माभिस्तु यतमानैर्बहुतरक्लेशेन दुर्मूल्येन च गृह्यसूत्रमात्रस्य भट्टभाष्यमेकं काशीतः क्रीतं। तदप्येकमात्रं पुस्तकमपरिशुद्धिभूयिष्ठं खण्डितञ्चेति सर्व्वथैव मुद्रणानर्हं। यदा चैत्रमवस्था समजनि, तदाऽनायत्या मूलमात्रस्यैव मुद्रणाय संसदाहमादिश्ये। अस्माभिस्त्वतिकठिनतरस्यैतस्य मूलमात्रस्य मुद्रणं न खल्वभीप्सितसिद्धयेऽलमिति विवेचयद्भिरभिनवं किञ्चिद्भाष्यमत्र निर्म्मितसुभिः कतिपयसूत्राणां भाष्यं निर्म्माय समितेरालोकनपथं नीतं। तदाचर्यिलालोच्य च विचारचतुरैः सभ्यैर्विद्यासमुद्रैर्मुद्रणायास्यानुमतिरकारि। गोभिलसूत्रपाठा-

थिनांस्तदर्थावगतयेऽवशिष्टसूत्राणां भाष्यरचनार्थञ्चाद्यमन्वरुत्सि। तद-
स्माभिरप्येवमुत्साहितैर्गृह्यसूत्रस्य, गृह्यासंग्रहस्य, श्राद्धकल्पस्य च भाष्यं
यथाबुद्धि निरमायि। न जाने कियत्यस्माकमस्मिन् कृतकृत्यता जा-
तेति। ग्रन्थस्य गुरुकलेवरतया च समाजाज्ञया भाष्येषु क्वचित् क्वचित्
संक्षिप्ता रीतिरवलम्बितेति न ततः प्रयोगस्य पूर्णाऽवगतिरिति ध्रुवं।
परन्तु यावता सूत्राणामर्थः स्पष्टमवगम्यते, तावान् विस्तरः कृतएव।
तदनेन यदि मान्यायाः समितेः पाठकानाञ्च विचारचतुराणां कथ-
ञ्चित् परितोषः स्यात्, तदा वयमपि कृतकृत्याभवेम इति।

यानि पुस्तकान्यवलम्ब्यैतस्य शोधनमकरवं तानि तावत् वर्णयामः।
गृह्यसूत्रस्य तावदेकं पुस्तकं काशीतः क्रीतं नवीनं वङ्गाक्षरलिखितं
सभाष्यमशुद्धिभूयिष्ठं खण्डितञ्च। द्वितीयमासियातिकसमितेरागतं
नवीनं नागराक्षरलिखितं पूर्व्वापरखण्डितं मध्ये कियदंशमात्रं सभा-
ष्यमशुद्धञ्च। तृतीयं तस्याएव समितेरागतं नागराक्षरलिखितं प्राचीनं
परिशुद्धतरं सूत्रमात्रं। चतुर्थमपि तथाविधमेव नवीनमशुद्धञ्च।
पञ्चमं स्कन्दपल्ली(कान्दापाड़ा)निवासि-रघुनाथसार्व्वभौमलिखितं वा-
ङ्गाक्षरं प्रायः शुद्धं सूत्रमात्रमेव। षष्ठं काशीतः क्रीतं नागराक्षर-
लिखितं नवीनं सूत्रमात्रं शुद्धप्रायञ्च—इति षट् पुस्तकान्याहृतानि।
गृह्यासंग्रहस्य त्वेकमेव पुस्तकमासियातिकसमाजस्थं नागराक्षरलिखितं
दीक्षितभाष्यसहितं प्राचीनं परिशुद्धप्रायञ्चाहृतं। श्राद्धकल्पस्य त्वेकं
महायशःकृतभाष्यसहितमस्मल्लिखितं वाङ्गाक्षरमभिनवमशुद्धञ्च। द्वि-
तीयमासियातिकसमाजस्थं नागराक्षरलिखितं नातिप्राचीनं परिशुद्धं
सूत्रमात्रं। तृतीयं ৺ वामनदासमुखोपाध्यायमुद्रितं सूत्रमात्रमिति

त्रीणि पुस्तकान्याहृतानि। श्राद्धकल्पपरिशिष्टस्यापि तान्येव। सन्ध्यासूत्रस्यैकमासियातिकसमाजस्थं नागराक्षरलिखितं नातिप्राचीनं परिशुद्धञ्च। द्वितीयं काशीतः क्रीतं तथाविधमेव नवीनं। तृतीयं पूर्व्ववन्मुद्रितमिति त्रीणि पुस्तकान्याहृतानि। स्नानसूत्रस्यैकं काशीतः क्रीतं नागराक्षरलिखितं नवीनं परिशुद्धप्रायञ्च। द्वितीयं पूर्व्ववन्मुद्रितमिति द्वे पुस्तके आहृते। स्नानसूत्रपरिशिष्टस्य तु पूर्व्ववन्मुद्रितमेकमेव पुस्तकमाहृतमिति। अथैतेषां पुस्तकानामिह व्यवहृतानि साङ्केतिकचिह्नानि,—

| चिह्नं। | अर्थः। |
|---|---|
| सो॰प्रा॰. | आसियातिकसमितिस्थं प्राचीनपुस्तकं।(गृह्यसूत्रस्य तृतीयपुस्तकं) |
| सो॰ न॰. | ” नवीनपुस्तकं। (गृह्यसूत्रस्य चतुर्थपुस्तकं) |
| सो॰ पु॰ | ” पुस्तकं। |
| सो॰ भा॰ | ” गृह्यसूत्रस्य द्वितीयं पुस्तकं। |
| का॰ क्री॰ | . . काशीतः क्रीतं पुस्तकं। |
| मु॰ | . . मुद्रितपुस्तकं। |

तदत्र गृह्यसूत्रं गोभिलप्रणीतमित्यत्र न संशयलेशोपि। गृह्यासंग्रहे* कर्म्मप्रदीपे च† तथैवाभिधानात्। गृह्यासंग्रहस्तु गोभिलपुत्रस्य कृतिरित्यपि ततः‡ एवाव गम्यते। परमत्रभवतोगोभिल-

---

* पुनरुक्तमतिक्रान्तं यच्च सिंहावलोकितं।
गोभिले ये न गृह्णन्ति न ते जानन्ति गोभिलं। (गृ॰२ प्र॰९४ श्लो॰)

† अथातोगोभिलोक्तानामन्येषाञ्चैव कर्म्मणां।
असम्प्टानां विधिं सम्यग्दर्शयिष्ये प्रदोपवत्। (क॰ १ प्र॰ १ ख॰ १ श्लो॰)

‡ गोभिलाचार्य्यपुत्रस्य योधीते संग्रहं पुमान्।
सर्व्वकर्म्मसुसंमूढ़ः परां सिद्धिमवाप्नुयात। (गृ॰ २ प्र॰ ९५ श्लो॰)

पुत्रस्य किं नामधेयमिति न खल्वधिगच्छामि। श्राद्धकल्पाख्यं श्राद्ध-सूत्रमपि गोभिलप्रणीतमिति श्रीदत्त-महायशः-शूलपाणि-वाचस्पति मिश्र-रघुनन्दनादीनां मतं। प्रसिद्धिश्चैवं। अस्माकन्तु गोभिलकृत-मेवैतदित्यत्र न निश्चयः। तथाहि। छन्दोगपरिशिष्टे वृद्धिश्राद्ध-प्रयोगप्रारम्भे, "वशिष्ठोक्तोविधिः कृत्स्नोद्रष्टव्योऽत्र निरामिषः"—इति। अन्तेच, "इदं शास्त्रञ्च गृह्यञ्च परिसंख्यानमेवच। वशिष्ठो-क्तञ्च योवेद स श्राद्धं वेद नेतरः"—इति कात्यायनेनोक्तं। एवमन्व-ष्टक्यकर्म्मणि गृह्योक्तस्य प्रयोगस्यासम्पूर्णतया तत्पूर्णत्वार्थं, "आसना-द्यर्घ्यपर्य्यन्तं वशिष्ठेन यथोदितं। कृत्वा कर्म्माथ पात्रेषु उक्तं दद्या-त्तिलोदकं"—इत्यपि तेनैवोक्तं। यदि गोभिलकृतमेवैतत् श्राद्धसूत्रं स्यात्, तर्हि एतस्योल्लेखमकृत्वा वशिष्ठोक्तस्य तत्र तत्रोल्लेखः कात्या-यनस्यानुचितः स्यात्। गोभिलस्यैव ग्रन्थान्तरे सम्पूर्णप्रयोगस्यापेक्षित विशेषस्य चावस्थितौ तदनुल्लिख्य तथाविधन्यूनतापरिहारार्थं सुन्यन्त-रीयग्रन्थस्योल्लेखनं कथमनुचितं न भवेत्। आसनाद्यर्घ्यपर्य्यन्तकर्म्म-कलापः खल्वत्र सुस्पष्टमुपदिष्टोवर्त्तते। तस्मात् नेदं श्राद्धसूत्रं गोभि-लप्रणीतं किन्तु वशिष्ठकृतं परिशिष्टरूपमिति तावत् प्रतिभाति। तथा, "यवैस्तिलार्थः" (४, ३, ३७) इति गृह्यसूत्रस्य भाष्ये, "अन्योपि प्रातरामन्त्रितान् विप्रानित्येवमादिकः कर्म्मप्रदीपोक्तोवि-शेषः, वाशिष्ठस्य कल्पउपलभ्यः"—इति भट्टनारायणेनोक्तं। अनया-लिखनभङ्ग्या श्राद्धसूत्रमिदं वाशिष्ठमिति तस्य मतं लक्ष्यते। इद-मपि हि श्राद्धसूत्रं 'श्राद्धकल्पः'—इत्याख्यायते। अन्यस्तु वाशिष्ठः कल्पोन दृश्यते। तस्मादयमेव वाशिष्ठः कल्पइति नानुचिता सम्भा-

वना। परमत्रापि संशयउदेति। वशिष्ठकृतस्तावत् कश्चिद् ग्रन्थश्छन्दोगानामस्तीत्यविवादं। स च ग्रन्थः क्वचित् (भट्टभाष्यादौ) कल्पतया, क्वचित् (परिशिष्टप्रकाशादौ) छान्दोग्यगृह्यतया, क्वचिच्च (शुद्धितत्त्वादौ) परिशिष्टतया, उल्लिखितः। तत्र च, वशिष्ठकृतच्छन्दोगपरिशिष्टे वृषोत्सर्गस्य कालविधिरस्तीति शुद्धितत्त्वादौ व्यक्तं। अत्र तु नास्ति वृषोत्सर्गस्य कालविधिरिति नेदं शुद्धितत्त्वाद्युल्लिखितं वशिष्ठकृतच्छन्दोगपरिशिष्टं। नाप्येतत् परिशिष्टप्रकाशानुमतं छान्दोग्यगृह्यं*। गृह्यकर्म्मणां विधानस्यात्राभावात्। श्राद्धकल्पसमाख्यत्वाच्च। एवं "प्राणसम्मितइत्यादि वाशिष्ठं बाधितं यथा"—इति कात्यायनोक्तोबाधितविषयोपि† नात्रोपलभ्यते। यदि तु ग्रन्थत्रयं वशिष्ठकृतं स्यात्, ग्रन्थोयं वाशिष्ठः कल्पइति शक्यते वक्तुं‡। अथ त्वेकएव वशिष्ठकृतोग्रन्थः क्वचित् कल्पतया, क्वचित् गृह्यतया, क्वचिच्च परि-

---

* छान्दोग्य-गृह्यनामा एकोग्रन्थोऽस्माभिरुपलब्धः, तत्र गृह्यकर्म्मणामेव विधिर्न श्राद्धस्य। स च ग्रन्थोन गोभिलीयानामिति सम्भाव्यते। क्वचित् क्वचित् गोभिलगृह्यापेक्षया वैलक्षण्यस्य तत्रोपलम्भात्। छन्दोगापरसूत्रनामकं छन्दोगानां पितृमेधसूत्रमप्येकं दृष्टं। तत्र श्राद्धस्य विधिरस्ति वृषोत्सर्गस्य तु नास्ति। श्राद्धविधिरपि तत्रत्योगोभिलविलक्षणइति (सम्भावयामः) सोपि श्राद्धविधिर्न गोभिलीयानामिति।

† बाधितविषयोऽन्यैवोपलब्धव्यइत्यत्रापि न निश्चयः। अन्यत्रापि तत्सम्भवात्।

‡ "वशिष्ठोक्तं च योवेद"-इत्येकत्रैव वशिष्ठोक्तोग्रन्थोवाशिष्ठः कल्पइति भट्टनारायणस्य, छान्दोग्यगृह्यनामा इति नारायणोपाध्यायस्य च मतदर्शनात् ग्रन्थत्रयं वशिष्ठकृतमस्तीत्यत्रापि न निश्चयः। यदि तु भट्टनारायणोक्तः कल्पः शुद्धितत्त्वोक्तं छन्दोगपरिशिष्टञ्चेति ग्रन्थद्वयं वशिष्ठकृतं स्यात्, कल्पोयं वाशिष्ठोभवितुमर्हति।

शिष्टतया कल्पितः, न तर्ह्ययं श्राद्धकल्पोवाशिष्टोभवितुमर्हति। तदेवं निर्व्यूढ़ं निरसितुमशक्यत्वात् प्रख्यातनाम्नां श्रीदत्तादीनां प्रसिद्धेश्चानुरोधः श्रनाश्रितः।

गोभिलगृह्यसूत्रस्य खण्डाः कैश्चित् कण्डिकानाम्ना कैश्चिच्च काण्डिकानाम्ना व्यवहृताः। अस्माभिस्तु भट्टनारायण-रघुनन्दनादीनां मतमनुरुन्धानैः खण्ड एव पक्षोऽवलम्बितइति ज्ञेयं। तदस्मिन् गृह्यसूत्रे प्रपाठकनामानश्चत्वारोऽध्यायाः सन्ति। प्रथमेऽध्याये काण्डिकानामानः खण्डानव विद्यन्ते, शिष्टेष्वध्यायेषु प्रत्येकं दश। तदेवमुनचत्वारिंशद्भिः खण्डैर्व्विभक्तोयं ग्रन्थः। तत्र प्रथमेऽध्याये,—आधानकाल-सायंप्रातर्होम-वैश्वदेव-बलिकर्म्मावश्यकहोमेतिकर्त्तव्यता-दर्शपौर्णमास-ब्रह्मस्थापन-चरुश्रपण-पुनराधानव्यवस्थाः परिभाषास्च काश्चिदभिहिताः। द्वितीयेऽध्याये,—विवाह-(गर्भधानापरनामधेय) भभव-पुंसवन-सीमन्तकरण-सोष्यन्तीहोम-जातकर्म्म-(निष्क्रमणापरनामधेय) चन्द्रदर्शन-चन्द्रोपस्थान-नामकरण-जन्मतिथ्यादियाग (प्रोषितागतकर्म्मापरनामधेय) मूर्द्धाभिघ्राण-चूड़ाकरणोपनयनविधयः प्रदर्शिताः। तृतीयेऽध्याये,—गोदानव्रत-व्रातिकव्रतादित्यव्रतौपनिषद्व्रत-ज्यैष्ठसामव्रत-महानाम्निकव्रतोपाकर्म्मोत्सर्गानध्यायाद्भुतप्रायश्चित्त-(समावर्त्तनापरनामधेय) आप्लावन-स्नातकव्रत-गोपुष्टिकर्म्म-गोयज्ञाश्वयज्ञ-श्रवणाकर्म्माश्वयुजीकर्म्म-नवयज्ञाग्रहायणीकर्म्म-स्वस्तरारोहणाष्टकाकर्म्माणि व्युत्पादितानि। चतुर्थेऽध्याये,—वपाश्रयणीहोमाष्टकाकर्म्मशेषान्वष्टक्य-पिण्डपितृयज्ञान्वाहार्य्य-वपाहोम-हलाभियोग-सीतायज्ञ-खलयज्ञ-प्रवपणयज्ञ-प्रलवनयज्ञ-पर्य्ययणयज्ञेन्द्राणीस्थालीपाक-काम्य-

होमेतिकर्त्तव्यता-दीक्षाऽनेकप्रकारकाम्यकर्म्मावसाननिर्णय-वास्तुशमन-(मधुपर्कापरनामधेय) अर्हणान्युपदिष्टानि । अप्रसङ्गागतञ्चान्यत् ।

गोभिलः कदा प्रादुरभूत् कदा वा तेनेदं गृह्यसूत्रं निर्म्मितमिति तत्त्वतोनिश्चेतुं न शक्यते । परमयं बहुप्राचीनइत्यत्र न सन्देहः । (सम्भावयामः) यदा गोभिलोग्रन्थमेतं रचितवान्, तदा लौकिकपद्यरचनायां लोकस्य कियदौत्सुक्यमजनि । यतोऽनेन गृह्यसूत्रस्य चतुर्थप्रपाठकस्य सप्तमकाण्डिकायां त्रीणि सूत्राण्यनुष्टुप्छन्दसा निर्म्मितानि । तत्रापि द्वितीयश्लोकस्य प्रथमचरणे नवाक्षराणि* तृतीयश्लोकस्य द्वितीयचरणे सप्ताक्षराणि† इति वैदिकवदेवाक्षरसमता नास्ति । वैदिकेषु छन्दःसु खल्वेकाक्षरन्यूनाधिक्यमगणनीयमेव‡ । गोभिलपुत्रेणापि पद्यैरेव गृह्यासंग्रहोऽरचि । तत्रापि वैदिकवदेव बह्वत्राक्षरन्यूनाधिक्यं गुरुलघुभावव्यत्यासश्चोपलभ्यते । तदेवमनुमीयते ; यदा गोभिल-तत्पुत्राभ्यां ग्रन्थोनिरमायि, तदा लौकिकपद्यरचनाप्रणाली न सुशृङ्खला जाता । यदयं गोभिलः पद्यत्रयमात्रं निर्म्मिमाणोपि पद्यद्वयेऽक्षरन्यूनाधिक्यं कुर्व्वन् लौकिकछन्दसोलक्षणं न सुष्ठु रक्षितवान् । तच्चैतन्नाशक्तिकृतं किन्तु तात्कालिकरीत्यनुगतमिति लिख्यते । ततोग्रन्थोयं मन्वादिसंहिताभ्योबहुप्राचीनः, कैव कथा पुराणादीनां । पुराणादिप्रतिपाद्यदेवार्च्चनादिकं

---

* अश्वत्थादग्निभयं विद्यात् प्लक्षाद्ब्रूयात् प्रमायुकान् ।
न्यग्रोधाच्छस्त्रसंपीड़ामक्ष्यामयमुदुम्बरात् ॥

† आदित्यदेवतोऽश्वत्थः प्लक्षोयमदेवतः ।
न्यग्रोधोवारुणोवृक्षः प्राजापत्यउदुम्बरः ॥

‡ नह्येकस्मादक्षरादविराध्नुवन्ति । (ताण्ड्यब्राह्मण, १५ प्र॰ १२ ख॰)

किमप्यत्र नोपलभ्यते। गृह्यशास्त्रस्य तु पुराणेषु मन्वादिस्मृतिषु च बहुनोल्लेखोवर्त्तते। गोभिलग्रन्थे च 'औद्गाहमानिः'—इति, 'वार्कखण्डिः'—इति चाश्रुतपूर्वं ऋषिनामद्वयं श्रूयते। तावेतावृषी ईदृक्प्राचीनौ यत् परवर्त्तिग्रन्थेष्वनयोर्नामापि न श्रूयते। अतोपि गोभिलस्यातिप्राचीनत्वं ज्ञायते।

अपि च। कलौ तावद्गवालम्भोमांसदानञ्च* श्राद्धे निषिद्धं। गोभिलेन तु मध्यमाष्टकायां वास्तुकर्म्मणि च गवालम्भोविहितः। मांसचरुश्चान्वष्टक्यश्राद्धे। ततः कलेः पूर्व्वमयं ग्रन्थोनिर्म्मितइति गम्यते। गोभिलश्चास्मिन् शास्त्रे वैदिकानपि शब्दान् प्रयुक्तवान्। सुराशब्दः खल्वनेन उदकार्थे प्रयुक्तः(गृ० २प्र० १का० १०सू०)। स तु वैदिकएव†। एवमन्येपि शब्दाअनुसन्धेयाः। सोयं सुराशब्दः कस्मिंश्चिदतीते काले उदकार्थे व्यवहृतआसीत्। स च कालोऽतीततमः। स्मार्त्तेषु ग्रन्थेषु तददर्शनात्। उपवसतिरपि अनेन कैश्चिन्नियमैर्विशिष्टस्य नियमितस्य वस्तुनएकस्मिन्नाहारे प्रयुक्तः‡। सोपि तस्मिन्नर्थे तदानीं व्यवहृतएवेति। गृह्यसूत्रकालात् परतस्त्वयमहोरात्राभोजनार्थे व्यवहृतोऽभूत्§। रचनारीतिरपि गोभिलस्य ब्राह्मणसम्बन्धिनीं रचना-

* अश्वमेधं गवालम्भं सन्यासं पलपैतृकं। देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्। (मलमासतत्त्वधृतवचनं)।

† सुराशब्दोहि नैघण्टुककाण्डे (१, १२) उदकनामसु पठितः। तत्र तत्र पञ्चविंशतितमं नाम।

‡ "सन्ध्यां पौर्णमासीमुपवसेत्"—इति, "अथापराह्णएवाशुत्यौपवसथिकं दम्पती भुञ्जीयातां"—इत्यादिसूत्रसन्दर्भादयमर्थोऽवगम्यते।

§ नित्योपवासीयोमर्त्यः सायं प्रातर्भुजिक्रियां। सन्त्यजेन्मतिमान् विप्रः सम्प्राप्ते हरिवासरे। (एकादशीतत्त्वधृतं कात्यायनवचनं)।

रीतिमनुसरति । तस्मादनुमीयते—ब्राह्मणसमये प्रादुर्भूतोऽयमिति । स चायं पारस्कराश्वलायनाभ्यामपि पूर्व्वकालीनइति ज्ञायते । यतः "प्रेते वा गृहपतौ परमेष्ठिकरणं" (१प्र० १का० १२सू०) इति सूत्रयता गोभिलेन गृहपतौ प्रेते आधानमुक्तं । "आधानस्य तु चत्वार उक्ताः कालाः पृथक् पृथक् । अन्त्या समिद्विवाहस्य विभागः परमेष्ठिनः"—(गृह्या० १प्र० ७६ श्लो०) इति गोभिलपुत्रेण विभागकालोप्याधानकालतयोक्तः । पारस्करेण तु "दायायकालएकेषां" (१का० १६सू०) इति सूत्रयता तदुभयमुपन्यस्तं । एवं "अपिवान्यं मथिलाऽभ्यादध्यात्" (१प्र० १का० १७सू०) इत्यारण्योऽग्निर्गोभिलेनोक्तः । "अरणिप्रदानमेके" (१का० १८सू०) इति पारस्करेणैकेषां मतमिति कृत्वा तदुपन्यस्तं । तथा "अष्टका रात्रिदेवता" (३प्र० १०का० १सू०) इति सूत्रतया गोभिलेनाष्टकाया-रात्रिदेवतात्वमुक्तं । आश्वलायनेन तु अष्टकादेवताप्रस्तावे, "रात्रिदेवतामेके" (२अ० ४क० १२सू०) इति सूत्रयता गोभिलीयं मतमेतन्निर्दिष्टं । अतः पारस्कराश्वलायनाभ्यां गोभिलः प्राचीनतमः ग्रन्थश्चायं तत्तद्ग्रन्थाभ्यामिति सिध्यते । आश्वलायनोप्यतीव प्राचीनः, स हि शाकलसमाम्नायस्य वाष्कलसमाम्नायस्य च कल्पसूत्रं प्रणिनाय । तत्प्रणीतञ्च महाव्रतप्रयोगप्रतिपादकं कल्पसूत्रं पञ्चमारण्यकतया वेदत्वेन प्रसिद्धं* । आश्वलायनप्रोक्तं ब्राह्मणमप्यस्ति†

---

* बह्वृचामध्याप[illegible]व्रतप्रयोगप्रतिपादकमाश्वलायननिर्म्मितं कल्पसूत्रमरण्येऽधीयमानाः पञ्चममारण्यकमिति वेदत्वेन व्यवहरन्ति । (जै०न्या० ६ अ० २ पा० १ अ० २ व०) ।

† कठशाखाश्वलायनब्राह्मणं । आश्वलायनब्राह्मणं । (मलमासतत्त्वे) ।

बह्वृचां शाखाभेदोपि आश्वलायनस्य नाम्ना प्रचरति। योहि ब्राह्मणस्य प्रवक्ता यदीयकल्पसूत्रस्यारण्यकतया प्रसिद्धिः, यन्नाम्नाच वेदशाखा-प्रचारः, स तु वैदिकसमये प्रादुर्भूतोऽतीवप्राचीनइत्यत्र कः सन्देहः। गोभिलस्त्वाश्वलायनादपि पूर्व्ववर्त्तीत्यतीव प्राचीनतरोयं वैदिककालीनश्चेति।

इदञ्चात्र द्रष्टव्यं। मन्त्रभागोक्तानां मन्त्राणां विनियोगः ब्राह्मणेषु श्रुत्यादितः। ब्राह्मणोक्तमन्त्राणाञ्च विनियोगः प्रायः कल्पसूत्रेषु। गृह्यसूत्रे तस्मिन् उपनिषद्ब्राह्मणापरनामधेय-मन्त्रब्राह्मणोक्तानां 'देवसवितः'—इत्यादि मन्त्राणां विनियोगोऽनुशिष्टः। मन्त्रब्राह्मणे तु सर्व्वे संस्कारमन्त्राः पठिताः। संस्काराश्चातिप्राचीनतमकालएव सुव्यवस्थाः इति ग्रन्थोप्ययमुपनिषद्ब्राह्मणप्रचारात् परतः प्राचीनतमकालएव निर्म्मितइत्यनुमीयते।

गोभिलसूत्रेभ्यस्तदानीन्तनोलोकाचारः कियानुपलभ्यते। सचेत्थं। त्रैवर्णिकाः साग्निकाः। वैदिक-दर्शपौर्णमासादि-स्मार्त्ताष्टकादि-यज्ञादि-धर्म्माचरणपराः। शूद्राणान्तु न कोपि धर्म्मस्तत्रोपलभ्यते। शूद्रैः सह गमनमपि निषिद्धं। ब्रह्मचर्य्याश्रमस्य बाहुल्येनाचरणं। विवाहः सुव्यवस्थः। गृहस्थानां दण्डादिधारणं। उपानद्धिरण्यस्रक्छत्रादिकं सुव्यवहृतं। रथस्य बाहुल्येन व्यवहारः। गावोधनमभ्यर्हितं। अश्वोऽप्यभ्यर्हितएव। कृषिकर्म्मणां बाहुल्येन प्रचारः। ऋणादानं प्रवृत्तं। वाणिज्यस्य विस्तारः। क्षौमशाणौर्णवसनानां व्यवहारः। कृष्णसारादि-चर्म्मणां व्यवहारः। गोयानं व्यवहृतं। शकटं व्यवहृतं। नौर्व्यवहृता। मणिकोव्यवहृतः। अपूपाः व्यवहृताः। मांसभक्षणं व्यवहृतं। विस्तृतः

पन्थाः। वंशादिनिर्म्मितं निवेशनं। इष्टका प्रचरिता। सानुचरविचरणं। ऋतुमत्या अपि विवाहः। पत्युर्दक्षिणतः स्त्रिया उपवेशनं। रात्रौ स्त्रियाबलिहरणं। गृह्येऽग्नौ पत्न्या अपि होमः। चान्द्रशब्दस्य पुंसि-व्यवहारः। गृहागतानां ऋत्विगादीनामर्हणं। विवाहकाले स्त्रिया अपि कस्यचित् मन्त्रस्य पाठः। पाणिग्रहणात् परं तस्मिन्नेव दिने वध्वा सह श्वशुरगृहात् प्रस्थानं। वरस्य एकेनैव रथेन वरवध्वोः स्वगृहगमनं। विवाहात् प्रभृति त्रिरात्रं वरवध्वोरक्षारलवणाशनं भूमौ सह शयनञ्च। पतिगृहमागताया वध्वा आनडुहे चर्म्मण्युपवेशनं। द्युतं प्रवृत्तं। वास्तुविद्या प्रचरिता। ज्योतिर्व्विद्या सुव्यवस्थिता। विवाहे सुरा-व्यवहारोऽपि गोभिलपुत्रवाक्यादवगम्यते*। सोऽयमाचारोऽतीव प्राचीनइति ग्रन्थोप्ययमतीव प्राचीनइत्यवधार्य्यते।

अपिच। वंशब्राह्मणनामा योऽयं सामवेदस्याष्टमोब्राह्मणग्रन्थः, तत्र ब्रह्मण आरभ्य सामगाचार्य्याणामनुक्रमोऽस्ति। तत्र गोभिलस्यो-ल्लेखोवर्त्तते†। अतोमन्त्रब्राह्मणप्रचारात् परतः‡ वंशब्राह्मणप्रचारा-

---

* गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। पाणिकर्म्मणि गौड़ी स्यात् सत्या माध्व्यधमा सुरा। (गृह्या० २ प्र० १६ श्लो०)।

† नयन्नर्य्यमभूतेः कालववादर्य्यमभूतिः कालववोभद्रशर्म्मणः कौशिकाद्भद्र-शर्म्मा कौशिकः पुष्ययशसऔदव्रजेः पुष्ययशाऔदव्रजिः शङ्करादौतमात् शङ्करोगौतमोऽर्यमराधाच्च गौतमात् पूषमित्राच्च गोभिलात् पूषमित्रोगोभि-लोऽश्वमित्राद्गोभिलादश्वमित्रोगोभिलोवरुणमित्राद्गोभिलाद्वरुणमित्रोगो-भिलोमूलमित्राद्गोभिलान्मूलमित्रोगोभिलोवत्समित्राद्गोभिलाद्वत्समित्रो-गोभिलोगौल्गुलवीपुत्राद्गोभिलाद्गौल्गुलवीपुत्रोगोभिलोबृहद्वसोः पितुर्बृहद्-वसुर्गोभिलोगोभिलादेव गोभिलोराधाच्च गौतमात् समानं परं समानं परं। (वंशब्राह्मण ३ प्र०)।

‡ मन्त्रब्राह्मणोक्तानां मन्त्राणामत्र विनियोगस्य सूत्रणात्।

चार्व्वाक् गोभिलः प्रादुर्भूतइति ध्रुवं। ब्राह्मणानां वेदतया यद्यप्यपौरुषेयत्वं भगवताजैमिनिनेरनुमतं, तथापि तेषां प्रवचनकालभेदो न शक्योऽपलपितुं। अस्मिंश्चार्थे, "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" (पा० ४अ० ३पा० १०५सू०) इति सूत्रयतः पाणिनेः स्वरसोऽप्यवगम्यते। अस्मात् खलु सूत्रादिदमवगम्यते; यद्ब्राह्मणकल्पाः पुराणप्रोक्ताश्चार्व्वाचीनप्रोक्ताश्च सन्तीति। तथाच, "पुराणप्रोक्तेष्विति किं याज्ञवल्क्यानि ब्राह्मणानि आश्मरथ्यः कल्पः। याज्ञवल्क्यादयोऽचिरकालादृत्याख्यानेषु वार्त्ता, तया व्यवहरति सूत्रकारः"—इति जयादित्येनोक्तं। एवं "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्"—इति वार्त्तिककारेणाभिहितं। तथा, "पुराणप्रोक्तेष्वित्यत्र याज्ञवल्क्यादिभ्यः प्रतिषेधोवक्तव्यः। याज्ञवल्क्यानि ब्राह्मणानि सौलभानीति। किं कारणं। तुल्यकालत्वात्। एतान्यपि तुल्यकालानीति"—इति व्याकरणमहाभाष्यं। तदनेनावगम्यते सर्व्वाणि ब्राह्मणानि नैकस्मिन् समये प्रोक्तानि, किन्तु कालभेदेन, तदमीषां कानिचित् चिरकालं प्रोक्तानि, कानिचिच्चाचिरकालमिति। ब्राह्मणाञ्च मन्त्रव्याख्यानरूपतया मन्त्रभागात् पराचीनत्वं ज्ञायते—इत्यन्यदेतत्। भगवतोवात्स्यायनस्य तु मतं ऋषिरुपदेष्टा ब्राह्मणानामिति लक्ष्यते। तथाच तेनोक्तं न्यायभाष्ये। "न भिद्यते च लौकिकाद्वाक्याद्वैदिकं वाक्यं प्रेक्षापूर्व्वकारिपुरुषप्रणीतत्वेन, तत्र लौकिकस्तावदपरीक्षकोपि न जातमात्रं कुमारकमेवं ब्रूयादधीष्व यजस्व ब्रह्मचर्य्यं चरेति, कुतएवं ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्तउपदिशति" (न्या० भा० ४अ० १आ० ६०सू०) इति।

तथा "यएव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्म्मशास्त्रस्य चेति"—(न्या० भा० ४ अ० १ आ० ६२ सू०) इति। यद्यपि स्नानग्रन्थे वंशब्राह्मणोक्तस्य "नमो ब्रह्मणे"—इत्यादिकस्य तर्पणे विनियोगो दृश्यते, तथापि गोभिलस्य वंशब्राह्मणप्रचारात् पराचीनत्वं न शङ्कितुमर्हं। स्नानग्रन्थस्य गोभिलपरिशिष्टरूपतया वीरमित्रोदयादावुक्तत्वात्। अतएव तद्ग्रन्थशेषे "इति गोभिलीयाः" इत्यभिधानं सङ्गच्छते। गोभिलकृतत्वे तस्य तन्नोपपद्यते।

परन्तु वंशब्राह्मणे बहवो गोभिला उल्लिखिताः। तत्र, कतमो गोभिलो गृह्यसूत्रस्यास्य कर्त्तेति न तत्त्वतोऽधिगच्छामः। (सम्भावयामः) योयं निरुपपदो गोभिलो वृद्धसोराचार्य्यः शिष्यश्च राधगौतमस्य, सोयं गृह्यसूत्रस्य कर्त्ता इति। यतो गोभिलकृतितयैवास्य प्रसिद्धिर्न नामान्तरेण। गृह्यासंग्रहेऽपि गोभिलतयैवास्योल्लेखः। गोभिलश्च निरुपपदः सएव। स खल्वयं गोभिलसम्प्रदायानामादिभूतः पूर्व्वतनोऽष्टमश्चेति वंशब्राह्मणप्रचारकालादपि चिरन्तनः—इति शिवं।

सहर सेरपुर।<br>
१३ आषाढ़।<br>
१८०२ शकाब्दे।

तर्कालङ्कारोपनामक<br>
श्रीचन्द्रकान्तशर्म्मणः।

# गोभिलगृह्यसूत्रभाष्ये क्रोड़पत्राणि ।



६पृष्ठे १०पंक्तौ "न 'गृह्यसंग्रहः' इति।" इत्यतः परं निवेश्यम् । तथाचाचार्य्यपुत्रश्चाह। "पत्न्यः पुत्राश्च कन्याश्च जनिव्याश्चापरे सुताः। गृह्याइति समाख्यातायजमानस्य दायकाः। तेषां संस्कारयोगेन शान्तिकर्म्मक्रियासु च। आचार्य्यविहितः कल्पस्तस्माद् गृह्याइति स्थितिः"। इति ।

---

२०पृष्ठे ६पंक्तौ "चेत्याहुः"—इत्यतः परं निवेश्यं । स खल्वयमभिरूपः,—"यत्र विद्या च वित्तञ्च सत्यं धर्म्मः शमोदमः। अभिरूपः स विज्ञेयः स्वाश्रमे योव्यवस्थितः" इति गृह्यासंग्रहोक्तो द्रष्टव्यः ।

---

३५पृष्ठे १०पंक्तौ निवेश्यं* ।

इति। "पार्थिवी चैव भौमीच लेखे द्वे द्वादशाङ्गुले। एकविंशति-राग्नेयी प्रादेशिन्ये उभे स्मृते। षड़ङ्गुलान्तराः कार्य्याआग्नेयीसंहितास्तु ताः। पार्थिवायास्तु रेखायास्तिस्रस्ताउत्तरोत्तराः ।

---

३५पृष्ठे १२ पंक्तौ निवेश्यं ।

"एषलेखविधिः प्रोक्तोगृह्याकर्म्मसु सर्व्वसु" इतिच । एतस्माद्वचनाद्

---

* यत्र यत्र 'पंक्तौ निवेश्यं'—इत्युच्यते, तत्र पंक्तिशेषे निवेशो बोध्यः ।

गृह्याकर्म्मस्वयमेव लेखविधिरादरणीयः। अन्यत्र पुनः कात्यायनोक्त इति बोद्धव्यम्। एवञ्च रेखादैवतवर्णयोरपि गृह्यासंग्रहोक्तकल्प एवाभिनिवेशः तत्रैवाभिधानात्।

---

२८पृष्ठे १२पंक्तौ "समाम्नानात्"—इत्यतः परं निवेश्यम्। परमार्थतः पुनर्गृह्योक्तकर्म्मसु पारशाखिकगुणोपसंहारोनास्ति, किन्तु श्रौतेष्वेव स इति गृह्यासंग्रहभाष्ये निपुणतरमुपपादयिष्यामः।

---

४६पृष्ठे ६पंक्तौ "किञ्चिदनुचितम्"—इत्यतः परं निवेश्यं। आचार्य्यपुत्रोप्येतस्माद्धेतोरेव विभागस्याधानकालत्वमाह। तथाच गृह्यासंग्रहः। "आधानस्य तु चत्वारउक्ताः कालाः पृथक् पृथक्। अन्या समिद्विवाहस्य विभागः परमेष्ठिनः" इति।

---

५४पृष्ठे १२पंक्तौ 'रच्छेदित्येतत्'—इत्यतः परं निवेश्यं। अथैवमुत्तरसूत्रे, 'सएव'—इत्यस्यैवाग्नेः परामर्शात् 'प्रेते वा गृहपतौ'—इत्यादिकालाहितानामग्नीनां गृह्यत्वं न प्राप्नोति?। नैष दोषः। प्राधान्यात् खल्वाचार्य्यः 'सएव' इत्याह। ततएवारभ्य खल्वसौ गृहस्थोभवति। अन्यस्याप्यग्नेर्गृह्यत्वं वास्तवमिति न शक्यं निरसितुम्। स्मार्त्तः खल्वग्निरेवमभिधीयते।

परतरेण वा सूत्रेणैतत् संभंत्स्यते। कथं कृत्वा?। यदेवान्त्यां समिधमभ्यादधाति, यदेव च जायायाः पाणिं जिघृक्षन् जुहोति, तं होममभिसंयच्छेत्—अभिमुखेन सम्यक् कुर्य्यात्, तेन चैव होमे-

नास्य प्रातराहुतिर्हुता भवतीति । सोयमित्थं परतरेणास्याभि-संबन्धः । अस्याञ्च वर्णनायामुत्तरसूत्रे 'सएव'—इति पूर्व्वप्रकृतः सर्व्वोप्यग्निः परामर्ष्टव्योभवति । कथं पुनरतिक्रम्य परसूत्रं परतरेण सूत्रेण संभंत्स्यते ?। अतिक्रान्तसंबन्धस्याचार्य्यानुमतत्वादित्याह । कथं ज्ञायते ?। "पुनरुक्तमतिक्रान्तं यच्च सिंहावलोकितं । गोभिले ये न गृह्णन्ति न ते ज्ञास्यन्ति गोभिलं" इति गृह्यासंग्रहवचनात् । उत्तर-सूत्रएव वा 'सएव'—इति व्यवहितोपि सर्व्वोग्निः परामृश्यतामिति न किञ्चिदनुचितम् ।

---

५७पृष्ठे २पंक्तौ 'क्रियते'—इत्यतः परं निवेश्यं ।
अन्यत्र परमेष्ठिविभक्तयोरग्न्योः । तथाच गृह्यासंग्रहः । "परमेष्ठी विभक्तश्च जुहुयादक्षतान् सक्तून् । प्रातस्तूष्णीं घृतं वापि प्रातराहुत्युप-क्रम."—इति ।

---

६२पृष्ठे ११पंक्तौ 'अत्रच'—इत्यतः परं निवेश्यं ।
"गोभिर्वालपवित्रेण धार्य्यमाणेन नित्यशः । न स्पृशन्तीह पापानि-श्रियं गात्रेषु तिष्ठति"—इति ।

---

१०३पृष्ठे ८पंक्तौ 'मधस्तादेव'—इत्यतः परं निवेश्यं ।
अभ्युपगम्य चेमं तर्पणयोः प्रकृतिविकारभावमेतावदस्माभिर्विचारितम् । परमार्थतः पुनरनयोः प्रकृतिविकारभावएव नास्ति । कुतः ?। द्वयोरेव सपरिकराभिहितत्वात् । स्नानाङ्गतर्पणं खल्वाचार्य्येण सपरिकरमभि-

हितं स्नानग्रन्थे । तथैव प्रधानतर्पणं कात्यायनेन कर्म्मप्रदीपे । कः खल्वनुन्मत्तः सपरिकराभिहितयोरनयोः प्रकृतिविकारभावमाचक्षीत ! । तस्मादन्यादृशमेव तर्पणं स्नानाङ्गं सवितुरुपस्थानात् परतः करणीयमाचार्य्येणोक्तम्, अन्यादृशमेव च प्रधानं तर्पणं ब्रह्मयज्ञात् परस्तात् कर्त्तव्यं कात्यायनेनोक्तमिति न किञ्चिदनुचितम् ।

---

२११पृष्ठे ९पंक्तौ 'सूचयति'—इत्यतः परं निवेश्यं ।

उपकल्पनञ्चामीषामग्नेरुत्तरत उदगग्राणां प्राञ्चं प्राञ्चं प्रयोजनानुसारेण करणीयम्। तथाच कर्म्मप्रदीपः । "प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः । तत्तथाऽऽसादयेत् द्रव्यं यद्यथा विनियुज्यते"—इति । उपकल्पितानाञ्चामीषां वीक्षणं प्रोक्षणञ्चाद्भिः कर्त्तव्यम्। कुतः ? । "द्रव्याणामुपक्लृप्तानां होमीयानां यथाविधि । प्रसिञ्चन् वीक्षणं कुर्य्यादद्भिरभ्युक्षणन्तथा"—इति गृह्यासंग्रहवचनात्। तदिदं द्रव्यासादनं स्थण्डिलोपलेपनात् परतएव करणीयम् । तथैवाचार्य्येण सूत्रणात् । आचार्य्यपुत्रोऽपि गृह्यासंग्रहे । "भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च । द्रव्याण्युत्तरतः स्थाप्य वृषीं कुर्य्यादुदङ्मुखीम्"—इत्युपलेपनात् परं द्रव्यासादनमभिधाय, पश्चाल्लक्षणकरणमग्निस्थापनादिकञ्चाभिहितवान् । एवञ्च, "पुरोडाशकपालेन तुषानुपवपति"—इत्यत्र यथा भविष्यता पुरोडाशेन कपालस्याभिसंबन्धः, तद्वदत्रापि भविष्यतैवाग्निना उत्तरस्याभिसंबन्धोबोद्धव्यः । अग्निस्थापनात् पूर्व्वमेव द्रव्यासादनस्योपदेशादनन्यगतेर्व्वचनात् ।

---

२२०पृष्ठे १३पंक्तौ 'गृह्यान्तरम्'—इत्यतःपरं निवेश्यं।
सेयमसङ्गता वर्णना। कस्मात्?। आचार्य्यपुत्राभिहितक्रमविरोधात्।
तथाच गृह्यासंग्रहः। "लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्दत्।
ततोभूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम्। ब्रह्माणमुपसंकल्प्य चरु-
श्रपणमारभेत्"—इति। कर्म्मप्रदीपोक्तस्तु क्रमआधानविषयः। कुतः?।
तत्रैव तदभिधानात्। गृह्यान्तरमपि अन्येषामेव नास्माकम्। का-
त्यायनादिभिर्हि तत् सूचितम्। ते किल काण्वादिशाखिनां सूत्रकाराः।

---

२२८पृष्ठे ६पंक्तौ, 'तत्त्वकारः'—इत्यतःपरं निवेश्यं।
परमार्थतः पुनर्व्विकल्पएवानयोर्वक्तव्यः। कथं नाम?। पञ्चाशद्भिर्वा-
कुशैर्भवेत् अपरिमितैर्वा,—इति। कुतः?। संख्यावचनस्याप्यस्मच्छाखा-
विषयत्वात्। गृह्यासंग्रहे खल्वाचार्य्यपुत्रः "पञ्चाशद्भिः कुशैर्ब्रह्मा",—
इत्याह।

---

२२९पृष्ठे १६पंक्तौ, 'उक्तम्'—इत्यतःपरं निवेश्यं।
इदन्त्विह वक्तव्यम्। कर्म्मप्रदीपकृता पदार्थानामुपन्यासमात्रं कृतं न तु
क्रमोऽप्यमीषामभिहितः। तथाविधवचनव्यक्तेरभावात्। तत्र, चर्व्वङ्ग-
मभिधाय भूमिजपप्रकाराभिधानात् खल्वानुमानिकः क्रमः परिचि-
कल्पयिषितः। स चायमाचार्य्यपुत्राभिहितप्रत्यक्षक्रमविरोधाद्भवितुं ना-
र्हति। तथाच "लेखनाभ्युक्षणे कृत्वा"—इत्यादि पुरस्तादुदाहृतम्।
तस्मादाचार्य्यपुत्रवचनात् भूमिजपं त्वृचेन परिसमूहनञ्च कृत्वा ब्रह्म-
स्थापनं कर्त्तव्यं, ततश्चरुश्रपणमित्यादरणीयम्। न चेदेवम्, कर्म्मप्रदीप-

कृता दक्षिणामभिधाय चर्व्वङ्गस्याभिधानात् दक्षिणानन्तरं चरुः स्यात् । आचार्य्योऽपि अग्न्याधापनात् परम्, "अथोलूखलमूषले"—इत्यादिना चरुश्रपणं सूचयिष्यति । तस्मात् 'अन्यत्' चरुश्रपणादिकम्,—इति वर्णनीयम् । अनर्थकं तर्हि; ननु 'अथोलूखलमूषले'—इति सूचयिष्यत्येव । नानर्थकम् । कुतः ? । सामान्यविशेषभावोपपत्तेः । अन्यत् चेष्टेत,—इति सामान्यतः सूचयित्वा, अथोलूखलमूषले,—इत्यादिना विशेषतः सूत्रणमुपपद्यते । आदरार्थत्वाच्च । आदरार्थं पुनरुपादानं खल्वाचार्य्याणां बहुलमुपलभ्यते । शास्त्रे चास्मिन् पुनरुक्तिराचार्य्यस्यानुमतेति पुरस्तान्निवेदितमस्माभिः । यत्र तु चरुर्नास्ति, तत्र, अन्यत् आज्यसंस्कारादिकम्,—इत्यभिप्रेत्य वा वचनमेतदुपपादनीयम् । द्रव्यासादनन्तु आस्तां तावदिदानीं, यावदग्निस्थापनादपि पूर्व्वं करणीयमिति पुरस्तादेव व्यवस्थापितमित्यास्तां विस्तरः ।

---

२२१पृष्ठे २०पंक्तौ, 'व्यपीत्यर्थः'—इत्यतःपरं निवेश्यं ।

प्रकारान्तरमाह गृह्यासंग्रहः । "चतुर्मुष्टिश्चरुः कार्य्यस्तूर्णामुत्तरोऽपि वा"—इति । मुष्टिः पलमिति गृह्यासंग्रहभाष्ये वक्ष्यामः ।

---

२३४पृष्ठे ११पंक्तौ निवेश्यं ।

अभिघारणञ्चेदं शृतं पवित्रान्तर्हितं कृत्वा करणीयम् । तथाच गृह्यासंग्रहः । "पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोऽभिघारयेत् । उद्वास्य चैव विधिना एवं तन्त्रं न लुप्यते" -इति ।

२३७पृष्ठे १८पंक्तौ 'प्रातर्होमादिभ्यः'—इत्यतः परं निवेश्यं ।
यत्र पुनस्स्तरणं क्रियते, तत्र ब्रह्मैव स्तरणकार्य्यं करोति, नलन्यत् परिस्तरणं करणीयम्। कुतः ?। "ब्रह्माणं स्तरणं विद्यात्तदर्थत्र न कल्पितः"—इति गृह्यासंग्रहवचनात् ।

——

२३८पृष्ठे १२पंक्तौ, 'इति'—इत्यतः परं निवेश्यं ।
तदिमे परिधयो गृह्याकर्म्मसु न करणीयाः । तथाच गृह्यासंग्रहः ।
"परिधींस्तु न कुर्व्वीत गृह्याकर्म्मसु याज्ञिकः । उदकाञ्जयस्तिस्रस्ते वै परिधयः स्मृताः"—इति ।

——

२३९पृष्ठे २पंक्तौ, 'मन्यन्ते'—इत्यतः परं निवेश्यं ।
सेयं विहितप्रतिषिद्धा प्रणीता गृह्याकर्म्मसु नोपकल्पयितव्या। कुतः ?।
"विहितप्रतिषिद्धाञ्च प्रणीतां नोपकल्पयेत्"—इति गृह्यासंग्रहवचनात्

——

२४१पृष्ठे १८पंक्तौ निवेश्यं ।
"एतत् सम्पूयनं नाम पश्चादुत्पवनं स्मृतम्" ।

——

२४३पृष्ठे ११पंक्तौ, 'भट्टभाष्यम्'—इत्यतः परं निवेश्यं ।
गृह्यासंग्रहस्त्वाह । "आज्यानां सर्पिरादीनां संस्कारे विधिचोदिते ।
अनधिश्रयणं दध्नः शेषाणां श्रयणं स्मृतम्"—इति ।

——

## २५५पृष्ठे १४पंक्तौ निवेश्यं ।

येषान्तु प्रतिपत्त्यर्थकर्म्म स्विष्टकृदिति दर्शनम्, तेषां खल्वेतदपचारेपि शेषस्याज्येन होतव्यं भवति ।

---

## २६३पृष्ठे १७पंक्तौ निवेश्यं ।

तदेतत् सर्व्वं पूर्व्वनिबद्धृणां मतमनुसरद्भिरस्माभिर्व्याख्यातं विचारितञ्च। परमार्थतस्तु प्रतिपत्तिरेवैतन्न भवति । कुतः? । निर्देशसामान्यात् । "ततएव वर्हिषः प्रादेशमात्रे पवित्रे कुरुते"—इति वदचापि, "तत-एव वर्हिषः कुशमुष्टिमादाय"—इति निर्दिश्यते । अस्माच्च निर्देश-सामान्यात् तत्रइव अत्रापि स्तृतशेषाणि वर्हींषि हृदयमागच्छन्ति । आगच्छन्ति चेत्, न युज्यते विनाकारणमुत्स्रष्टुम् । स्तृतानां वर्हि-षामिदानीं प्रतिपिपातयितत्वादिति चेत् । न । प्रमाणाभावात् । प्रतिपत्तिप्राये वचनादिति चेत् । न । असिद्धेः । कथमसिद्धिः? । आग्नेयादीनामप्रतिपत्तीनां सन्निहिततरत्वात् । तदेवं प्रमाणविशेषस्या-भावात् विनियुक्तविनियोगेन खल्वपि शुक्लीवर्णयितुम् । प्रतिपत्ति-प्रायेवचनात् खल्वानुमानिकं प्रतिपत्तित्वं परिचिकल्पयिषितम्। तच्चै-तत् न्यायविरोधान्न सेद्धुमर्हति । तस्मात् "विरोधे च श्रुतिविशेषाद-व्यक्तः शेषे"—इति सिद्धान्तात् स्तृतशेषादेव वर्हिषः कुशमुष्टिमादाय, —इति व्याख्येयम् । तदेतदाचार्य्यपुत्रः स्पष्टयाञ्चकार गृह्यासंग्रहे । "स्तृतेभ्येन प्रचिन्नीयात् यातयामं स्तृतं स्तृतम् । स्तृतशेषात्ततोगृह्य यज्ञवास्तुक्रिया तथा"—इति । यज्ञवास्तुक्रियां कृत्वा चाज्येन पूर्णाहुतिर्होतव्या । तथाच गृह्यासंग्रहः । "यज्ञवास्तुक्रियां कृत्वा

विधिदृष्टेन कर्म्मणा । आज्यधारामविच्छिन्नां जुहुयात् सार्व्वकामिकीम्"—इति ।

---

२६९पृष्ठे ३पंक्तौ निवेश्यं ।

सूत्रद्वयं वैतत्,—'पूर्णपात्रोदक्षिणा'—इति, 'तं ब्रह्मणे दद्यात्'—इति च । तत्र, 'पूर्णपात्रोदक्षिणा'—इत्यनेन, पूर्णपात्रं दक्षिणा भवति कर्म्मणाम्, अनुच्यमानायां दक्षिणायाम्—इत्युच्यते । कथं ज्ञायते ?। अनुच्यमानायां दक्षिणायां पूर्णपात्रादिका दक्षिणा भवति,—इति कर्म्मप्रदीपवचनात् ।

'तं ब्रह्मणे दद्यात्'—इत्यनेन ब्रह्मणे दक्षिणायादानमुपदिश्यते । तदनेन तत्शब्देन दक्षिणैव परामृश्यते न पूर्णपात्रम् । कस्मात् ?। सन्निहिततरत्वात् दक्षिणायाः, व्यपेतत्वाच्च पूर्णपात्रस्य । अर्थवत्वाच्च । दक्षिणादानेन हि नः प्रयोजनं न पूर्णपात्रदानेन । लिङ्गव्यत्ययस्तु भवतोऽपि समानः । 'ब्रह्मणे दक्षिणा देया'—इति कात्यायनवचनाच्चैतदेवं प्रतिपत्तव्यम् । स खल्वस्पष्टानां गोभिलोक्तानां प्रतीपवत् स्पष्टमुपदेष्टा,—इत्यवोचाम ।

---

२७०पृष्ठे १२पंक्तौ निवेश्यं ।

अथ वा । एकोब्रह्मैव ऋत्विगिति ब्रह्मणे दक्षिणादाने हेतुवचनमेतत् । होतृाप्यस्त्वन्यऋत्विगित्याशङ्कायामुत्तरं सूत्रं प्रवर्त्स्यति ।

---

२८०पृष्ठे ३पंक्तौ 'वाभिषेकः'—इत्यतः परं निवेश्यं । तथाच गृह्यासंग्रहः । "सर्व्वयज्ञेषु विप्राणामद्भिः पूर्णं प्रवर्त्तते । तस्मात् सुरोत्तमाद्धापोऽद्भिरेवाभिषेचयेत्"—इति ।

---

२८१पृष्ठे २१पंक्तौ 'रित्येतत्'—इत्यतः परं निवेश्यं । तथाच गृह्यासंग्रहः । "महानदीषु या आपः कौप्यान्यास्तु ह्रदेषु च । गन्धवर्णरसैर्युक्ताश्शुवास्ताइति निश्चयः"—इति । तदेवं शुत्राभिरद्भिः

---

२८२पृष्ठे २पंक्तौ 'इत्यन्ये'—इत्यतः परं निवेश्यं । रस्नुतस्तु गन्धमाल्यैरुदकुम्भमलङ्कृत्य प्रावृतांसोधारयेत् । कथं ज्ञायते ? । "गन्धमाल्यैरलङ्कृत्य सकुम्भोवाग्यतः शुचिः । धारयेत् त्रिषु वर्णेषु प्रावृतांसोद्विजोत्तमः"—इति गृह्यासंग्रहवचनात् ।

---

२८३पृष्ठे १५पंक्तौ निवेश्यं ।

अत्र च, "सवर्णाभिरनिन्द्याभिरद्भिरुत्तमिश्रितैः । स्नानं चतुर्भिः-कलसैः स्त्रीभिः स्त्रीं यत्र स्नावनम्"—इति गृह्यासंग्रहोक्तोविशेषो द्रष्टव्यः ।

---

२८७पृष्ठे २पंक्तौ निवेश्यं ।

तथाच गृह्यासंग्रहः । "यदा निष्क्रामयेत् कन्यां वरः पाणिं जिघृक्षयन् । अग्निं प्रदक्षिणं कृत्वा कटस्तीर्णं पदंव्रजेत् । पदा प्रपद्य पन्थानं पतियानं संजपेद्वधूः । वरोवाऽत्र जपेन्मन्त्रमाकटान्तादितिस्थितिः" —इति ।

२०५पृष्ठे ३पंक्तौ, 'इति'—इत्यतः परं निवेश्यं ।

वस्तुतस्तु, "तथा लाजाञ्जलिर्बध्वा हूयतेऽङ्गुलिपर्व्वभिः"—इति गृह्यासंग्रहोक्तप्रकारेणास्माकमयं होमोभवति, न शाखान्तरोक्तप्रकारेण। स्वशाखाश्रयमुत्सृज्य परशाखाश्रयकरणस्य निषेधादिति द्रष्टव्यम्।

---

२०८पृष्ठे ४पंक्तौ निवेश्यं ।

"प्राजग्राहमुदग्राहं ब्रह्माणमृत्विजं तथा। एतानि वाह्यतः कृत्वा शेषाणान्तु प्रदक्षिणम्"—इति। यश्चायं होमात् परतः परिणयः, सोयं ब्राह्म्यादिषु विवाहेषु द्रष्टव्यः। गान्धर्व्वादिषु पुनर्व्विवाहेषु प्रथममेव परिणयः ततोहोमः करणीयः। तथा च गृह्यासंग्रहः। "ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः। पूर्व्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः। गान्धर्व्वासुरपैशाचाविवाहाराक्षमाश्च ये। तेषां परिणयः पूर्व्वं पश्चाद्धोमो विधीयते"—इति। स खल्वयमाचार्य्योब्राह्म्यादीन् प्रशस्तान् विवाहानभिप्रेत्य होमात् परतः परिणयनं सूचयाञ्चकार,—इति लिख्यते।

---

२०९पृष्ठे १२पंक्तौ 'गृह्यान्तराच्च'—इत्यतः परं निवेश्यं।

नैतत् समीचीनम्। कुतः?। स्वशास्त्रविरोधात्। तथा च गृह्यासंग्रहः। "एवं लाजहविः शेषं हूयते सूर्पजिह्वया"—इति। तस्मादस्माकं सूर्पजिह्वयैतद्धोतव्यं भवति।

---

२१२पृष्ठे ७पंक्तौ, निवेश्यं ।

तथाच गृह्यासंग्रहः । 'विवाहे यो विधिः प्रोक्तोमन्त्रादाप्त्यवाचकाः। वरस्तु तान् जपेत् सर्व्वान् क्षत्रियराजन्यवैश्ययोः',—इति ।

---

२१८पृष्ठे १७पंक्तौ 'हूयते'—इत्यतः परं निवेश्यं ।

तथाच गृह्यासंग्रहः । "हुत्वाऽऽज्यं परिशेषेण यत् द्रव्यमुपकल्पितम्। स्रुवेणैव तु तत् स्पृष्टं सम्पातञ्चैव तं विदुः"—इति ।

---

२२३पृष्ठे ८पंक्तौ 'प्रमाणाभावात्'—इत्यतः परं निवेश्यं ।

वस्तुतस्तु आसुरादिविवाहोढ़ायाः प्रेतकृत्यं पितृगोत्रेण कर्त्तव्यमिति वृद्धशातातपेनोक्तम् । यथा। "आसुरादिविवाहेषु पितृगोत्रेण धर्म्मवित्"—इति । सपिण्डीकरणन्वस्यास्तन्मात्रादिभिः करणीयमित्याह सएव। "तन्मात्रा तत्पितामह्या तत्श्वश्र्वा वा सपिण्डनम्। आसुरादिविवाहेषु विन्नानां योषितां भवेत्"—इति । एवमपि, सपिण्डीकरणैकमूर्त्तित्वप्राप्तेर्हेतुत्वेनोपादानात् प्राचीनं वचनम्—चतुर्थीतः पूर्व्वमेव या संस्थिता, तद्विषयमेव पर्य्यवस्यति,—इति ध्येयम् ।

---

२२७पृष्ठे ७पंक्तौ निवेश्यं ।

परमार्थतस्तु, तत्र 'हविष्यमन्नम्'—इति सूचयन् एतदेवाक्षारलवणं व्याकरोति । तस्मात्,—"अयुक्तमक्षारलवणैरपर्य्युषितमेवच । हविष्यमेतदन्नाद्यमसुरैश्चाप्यसंयुतम्"—इति गृह्यासंग्रहोक्तस्याशनं बोद्धव्यम्।

---

२४४पृष्ठे १५पंक्तौ 'एवायमर्थः'—इत्यतः परं निवेश्यं।
वस्तुतस्तु, उद्वर्त्तनं नखरोमच्छेदनं मेखलायाः स्रंसनञ्च स्नानमुच्यते। कथं ज्ञायते?। "उद्वर्त्तनं नखच्छेदो रोमच्छेदनमेवच। स्रंसनं मेखलायाश्च स्नानानि विदुर्बुधाः"—इति गृह्यासंग्रहवचनात्। एतदविद्वांसएव 'कामयित्वा'—इति पठन्ति। तदश्रद्धेयम्।

---

२५२पृष्ठे ३पंक्तौ निवेश्यं।
वस्तुतस्तु मन्त्रानादेशे व्याहृतयः प्रयोक्तव्याभवन्ति। कुतः?। "यत्र मन्त्रान विद्यन्ते व्याहृतीस्तत्र योजयेत्"—इति गृह्यासंग्रहवचनात्। चरुश्रपणादिकमेव तूष्णीं कर्त्तव्यमिति तत्रैव ज्ञेयम्। तस्मात् व्याहृतिभिरंशस्याभिमर्शनं मन्त्रेण नाभिदेशस्य,—इत्यादरणीयम्।

---

२६६पृष्ठे १पंक्तौ 'सिद्धम्)।'—इत्यतः परं निवेश्यं।
अथ वा। युग्मम्—इति च्छेदः। युग्ममुभयतः फलम्, तं पूर्व्वमाहृतम्,—

---

२६७पृष्ठे १९पंक्तौ निवेश्यम्।
तत्र ब्रूमः। यत्तावदुक्तम्,—प्रथमएवोन्नयने तिस्रोदर्भपिञ्जल्योव्याप्रियन्ते एवमुत्तरयोः,—इति, एतद्ब्रूमः। यत् पुनरुक्तम्,—उन्नयनत्रित्वाद्दर्भपिञ्जल्योपि नवैव सम्पद्यन्ते,—इति, एतन्नानुजानीमः। किं कारणम्?। मानाभावात्। 'भूरितिदर्भपिञ्जलीभिरेव प्रथमं भुवरिति द्वितीयं स्वरिति तृतीयम्'—इति वचनात् खलु तिसृणामेव

दर्भपिञ्जलीनां सर्व्वैरुन्नयनैः संबन्धोऽवगम्यते । नासौ युज्यते विना-कारणमुत्स्रष्टुम् । तस्मात्—एकैकया पिञ्जल्या एकैकमुन्नयनम्,—इत्यसङ्गतं वचनम् । तथाच गृह्यासंग्रहः । "सीमन्ते दर्भपिञ्जल्यस्ति-स्रस्ताभिस्त्रिरुन्नयेत्"—इति । तस्मात् तिस्रएव दर्भपिञ्जल्यस्ताभिरेव प्रथममुन्नयनं ताभिरेव द्वितीय ताभिरेव तृतीयमित्याख्येयम् ।

---

३६८पृष्ठे २पंक्तौ 'प्रक्षालनम्'—इत्यतः परं निवेश्यं । निर्व्वपणन्त्वत्र नास्ति । तथाच गृह्यासंग्रहः । "चूड़ाकर्म्मणि सीमन्ते यस्य पाकः सदा गृहे । विवाहेचैव लाजानां नोक्तोनिर्व्वपणोविधिः" —इति ।

---

४०४पृष्ठे १पंक्तौ निवेश्यं ।

इति । "दक्षिणाकपर्द्दाः शिष्टाआत्रेयास्त्रिकपर्द्दिनः । आङ्गिरसः पञ्चचूड़ामुण्डाभृगोः शिखिनोऽन्ये" ।

---

४३८पृष्ठे ७पंक्तौ, 'शब्दस्यार्थः'—इत्यतः परं निवेश्य । वस्तुतस्तु सावित्रव्रतमष्टभिर्वर्षैर्मासैर्दिनैर्वा करणीयम् । कुतः? । "समामासाअहोरात्रास्तुल्यब्राह्मणचोदिताः । सावित्रमष्टभिर्वर्षैः कार्य्यं मासैर्दिनैश्च वा"—इति गृह्यासंग्रहवचनात् । तस्मात् नात्र संवत्सर-व्रताचरणनियमः । 'नाचरिष्यन्तं संवत्सरमुपनयेत्'—इति गोदाना-दिव्रतविषयम् । कथं ज्ञायते? । गोदानव्रतएव तदभिधानात् ।

---

### ४४२पृष्ठे ११पंक्तौ निवेश्यं।

वस्तुतस्तु गोदानादिव्रतएवोपनयने नियमोऽयं न प्राचीनेप्युपनयने। तत्र विशेषस्याभिधानात्। अतिक्रम्याभिधानाच्चास्य। सोऽयमुपनयतिः सन्निहितमेवोपनयनमभिधत्ते न प्राचीनमपि। व्यक्तिवचनः खल्वयं सन्निहितां व्यक्तिं शक्नोति वदितुं, नत्वन्याम्। आग्नेयीन्यायात्। परतोवक्ष्यमाणानां धर्म्माणां यथा प्राचीनोपनयनगोचरत्वमपि, तथाऽभिहितमस्माभिः,—"वार्चञ्चास्मै दण्डं प्रयच्छन् वाचयति"—इत्यत्र। परतश्चैतद्वक्ष्यामः।

---

### ४८२पृष्ठे ३पंक्तौ निवेश्यं।

वस्तुतस्तु, अस्माकमुपाकरणद्वैविध्येप्युत्सर्गस्य न द्वैविध्यम्। उत्सर्गः खल्वेकएवोभयोरप्युपाकरणयोः प्रौष्ठपदे तैष्यां स्यात्। कुतः?। उभयमुपाकरणं सूचयित्वा परतस्तैष्यामुत्सर्गस्य सूत्रणात्तथाऽवगतेः। अतएव कात्यायनोपि 'प्रौष्ठपदे तिष्येण वहिः'-इत्यादिना तथैवाह। नचेदमुदगयनोपाकरणाभिप्रायं वचनमित्यत्र प्रमाणमस्ति। तथात्वेचोत्सर्गान्तरं नस्यादेव। अनुपदेशात्। तस्मादेकएवोत्सर्गः प्रौष्ठपदे तिष्येणेत्यवधार्य्यते। अतएवोभयमुपाकरणमुपदिश्य "उत्सर्गस्त्वेकएवैषां तैष्यां प्रौष्ठपदेऽपि च"—इत्येकमेवोत्सर्गमुभयेषामभिधत्ते। न च प्रौष्ठपदे हस्तेनोपाकरणकर्त्तुस्तत्रैव पुनस्तिष्येणोत्सर्गोन सम्भवतीतिवाच्यम्। वर्षान्तरे प्रौष्ठपदे हस्तेनोपाकर्त्तुर्वर्षान्तरे तत्रैव तिष्येणोत्सर्गसम्भवात्। तथा गार्ग्यः। "सिंहे रवौ तु पुष्यर्क्षे पूर्व्वाह्णेऽविवरे वहिः। छन्दोगामिलिताः कुर्य्युरुत्सर्गं स्वस्वछन्दसाम्। शुक्ल-

पत्नेतु हस्तेन उपाकर्म्मापराह्णिकम्''—इति सिंहे रवौ पुष्यर्क्षे उत्सर्ग-मभिधाय हस्तेनोपाकरणमभिदधानएतदेवाह । अस्माद्वचनादस्माक-मपाकरणे अपराह्णः कालः स्यात् । "अध्यायानामुपाकर्म्म कुर्य्यात् काले-पराह्णके । पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदोविदुः''—इति परिशिष्टवचनाच्चैतदेवं प्रतिपत्तव्यम् । गोभिलस्यैतदिति हेमाद्रिः । यदा पुनः सिंहस्थे सूर्य्ये शुक्लपक्षे योहस्तः तस्मात् प्राचीनः पुष्यः कर्कटस्थे रवौ भवति, तदा तत्रैव पुष्ये उत्सर्गः करणीयः । कुतः ? । "मासे प्रौष्ठपदे हस्तात् पुष्यः पूर्व्वोभवेद् यदा। तदा तु श्रावणे कुर्य्या-दुत्सर्गं छन्दसां द्विजः''—इति परिशिष्टोक्तेः । तथा प्रौष्ठपदे हस्तस्य दुष्टत्वे तत्रोपाकरणं निषेधति चतुर्व्वर्गचिन्तामणौ स्मृतिः । "उपा-कर्म्म न कुर्व्वन्ति क्रमात् सामर्ग्यजुर्व्विदः । ग्रहसंक्रान्तियुक्तेषु हस्तश्रवण-पर्व्वसु''-इति । तदेवम्भूतस्थले श्रावणएव हस्ते उपाकरणं कर्त्तव्यं भवति । "बह्वृचाः श्रवणे चैव हस्तर्क्षे सामवेदिनः''—इति परिशिष्टवच-नात । श्रावणे हि बह्वृचाः श्रवणेनोपाकुर्व्वन्ति । गोभिलस्यैतदिति निर्णयामृतकारः । "धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् । श्रावणं कर्म्मकुर्व्वीरन् ऋग्यजुःसामपाठकाः''—इति परिशिष्टवचनान्तरेपि श्रावणं कर्म्मेति समाख्यया तथाऽवगम्यते । विशेषमाहतुर्वृद्धमनुका-त्यायनौ । "अर्द्धरात्रादधस्ताच्चेत् संक्रान्तिग्रहणं तदा । उपाकर्म्म न कुर्व्वीत परतश्चेन्न दोषकृत्''—इति ।

तस्मादियमेवावधारणा,—प्रौष्ठपदीं हस्तेनोपकृत्य देवपर्व्वाणि-गेयगानादीनि तावदधीयीत यावत् अब्दान्तरे प्रौष्ठपदे तिष्यः भवति। उदगयने चोपाकृत्योत्तरारण्यकादिकं यावत् षण्मासानधीयीत । ततः

प्रौष्ठपदे तिष्येण द्वयोरुत्सर्गं कुर्य्यात्। उत्सर्गात् परतस्तु यावदन्यदुपाकरणं न क्रियते, तावद्वेदं न व्याहरेदन्यत्र ब्राह्मणात्। अस्मच्छास्त्रे तथैवोपदेशात्। एवञ्च, उत्सर्गात् परमपि शुक्लपक्षेषु छन्दसामध्ययनबोधकानि यानि मन्वादिवचनान्युदाहृतानि, तानि अस्मद्व्यतिरिक्तविषयाणि बोद्धव्यानि। अस्मच्छास्त्रे प्रौष्ठपदशुक्लपक्षे तिष्येणोत्सर्गात् परतः पुनस्तत्रैव हस्तेनोपाकरणविधानात् तेषां वचनानां न खल्वत्रावकाशोभवतीति।

---

५१५पृष्ठे ५पंक्तौ निवेश्यं।

"क्षुण्णे द्रव्यपले सम्यक् जलमुष्णं विनिःक्षिपेत्। मृत्पात्रे कुड़वोन्मानं ततस्तु स्रावयेत् पटात्। सस्याच्चूर्णद्रवः फाण्टः"—इत्युक्तलक्षणाभि

---

५६०पृष्ठे १पंक्तौ "थ्यैत्यर्थः"—इत्यतः परं निवेश्यं।

अथवा। तूष्णीमिति वचनादमन्त्रकमेवैतान् बलीन् हरेत्।

---

५६१पृष्ठे ८पंक्तौ 'बोद्धव्यः'—'—इत्यतः परं निवेश्यं।

सेयमसङ्गता वर्णना भट्टनारायणस्य। कस्मात्?। "दधि सर्पिश्च संपृक्तः प्रोक्तोह्योषपृषातकः। होमकाले तु तस्याग्नेः स्थानमुत्तरपूर्व्वतः" इति गृह्यासंग्रहविरोधात्। तस्मादग्नेरुत्तरपूर्व्वतः समासादिते सतीति वर्णनीयम्।

६५०पृष्ठे १८पंक्तौ निवेश्यं ।

अत्र किञ्चिद्वक्तव्यमस्ति। सूत्रतन्तु निधानञ्चेदं—"एतद्वः पितरोवासः" —इति मन्त्रमुच्चार्य्य सूचितप्रकारेण करणीयम् । कथं ज्ञायते ? । पठ्यमानमन्त्रकाण्डे अस्मिन्नवसरे मन्त्रस्यैतस्य पठितत्वात् । सचेन्न विनियुज्येत, अनर्थकस्तस्य पाठः स्यात् । नचार्थवानाम्नायोऽनर्थकः कर्त्तव्यः। कथन्तर्ह्यस्मिन्नर्थे सूत्रं न दृश्यते ? । प्रत्येकमभिलापं सूच-यितुं प्रवृत्तः खल्वयमाचार्य्योविनियोगं मन्त्रस्य न सूचयाञ्चकार । सकृद्धि त्रीन् पित्रादीनुद्दिश्य मन्त्रोयं पठितव्योभवति । लिङ्गाच्चात्रैव कर्म्मणि विनियोगं मन्त्रस्य सुज्ञानं मन्यते,—इति । कथं पुनरवगम्यते त्रीन् पित्रादीनुद्दिश्य सकृदेव मन्त्रः पठितव्यइति । बहुवचनादित्याह । 'नमोवः पितरः'—इत्यादौ खल्वस्मिन् वाक्यप्रवाहे पित्रादिषु त्रिष्वेव बहुवचनान्तपितृपदप्रयोगादत्रापि तथैवावधार्य्यते । न खल्वस्यैव पूर्व्व-स्मिन् परस्मिंश्च वाक्यप्रवाहे पित्रादित्रिके बहुवचनान्तपितृपदस्य प्रयोगेऽवधृते इहैवाकस्मादर्द्धजरतीयन्यायेन एकैकस्मिन् पित्रादौ तथाप्रयोगइति शक्यमवगन्तुम् । कारणाभावात् । तस्मात् सकृदेव मन्त्रपाठः, अभिलापस्तु प्रत्येकमिति सिद्धम् ।

---

७५७पृष्ठे १९पंक्तौ 'इत्यादिना'—इत्यतः परं निवेश्यं ।

"साक्षतं सुमनोयुक्तं उदकं दधिमिश्रितम् । अर्घ्यं, दधिमधुभ्याञ्च मधुपर्कोविधीयते । कांस्येनैवार्हनीयस्य निनयेदर्घ्यमञ्जलौ । कांस्या-पिधानं कांस्यस्थं मधुपर्कं निवेदयेत्"—इति कर्म्मप्रदीपवचनेनच

---

७५८पृष्ठे ११पंक्तौ, 'भवति'—इत्यतः परं निवेश्यं।
अपिच। 'सान्तं सुमनोयुक्तम्'-इत्यादिवचनेन द्वितीयं मधुपर्कमभिधाय 'कांस्येनैव'—इत्यादि तत्परवचनेन तस्यापि कांस्यापिधानत्वं कांस्यस्थत्वञ्च कात्यायनः प्राह। सत्वेकदेशदर्शी परवचनमजानानोमन्यते,—द्वितीये मधुपर्के पात्रस्यानुपदेशः,—इति।

---

७८७पृष्ठे १०पंक्तौ निवेश्यं।
तत्र गृह्याकर्म्मस्वाचार्य्यपुत्रोक्तएवप्रकारः। कस्मात्?। "एषलेखविधिः प्रोक्तोगृह्याकर्म्मसु सर्व्वसु"—इत्युपसंहारात्। कात्यायनोक्तस्तु प्रकारः पारिशेष्यादन्यत्र निविशते इति द्रष्टव्यं।

---

८००पृष्ठे ५पंक्तौ "देवलवचनात्"। इत्यतः परं निवेश्यं।
पक्षकल्पेऽपि शस्त्रहतानां श्राद्धमेव चतुर्द्दश्यां भवति नान्येषां। कथं ज्ञायते?। "नैव श्राद्धं चतुर्दश्यां कुर्य्याच्छस्त्रहतादृते। पक्षश्राद्धेपि कर्त्तव्ये श्राद्धशून्यैव सा तिथिः"। इतिवचनादिति कल्पतरुप्रभृतयः। चतुर्दशीत्यागे पञ्चदशादिश्राद्धसम्पत्तये पौर्णमास्यां श्राद्धमुक्तं स्मृतिसागरे। "निखिलन्तु यदा पक्षं श्राद्धं कर्त्तुमिहेच्छति। पौर्णमासीं समारभ्य तदा श्राद्धं समाचरेत्। पौर्णमास्यान्तु पूर्व्वाह्ने श्राद्धं नान्दीमुखं चरेत्। प्रपितामहाच्च ये पूर्व्वे त्रयोनान्दीमुखास्तु ते"। इति। युक्तस्तु कार्ष्णाजिनिवचनादनयोर्विकल्पइति।

---

| पत्रे। | पङ्क्तौ। | अशुद्धं। | शुद्धं। |
|---|---|---|---|
| २१० | २० | मेद्धयाम | मेद्धयाम् |
| २१२ | ४ | नियि | यिनि |
| २२३ | १ | नाच | 'नाच |
| २२३ | १ | 'उपवेशनात् | उपवेशनात् |
| २२७ | १४ | कमण्डलु | कमण्डलुं |
| २३१ | ७ | सद्यन्निरूप्य | सद्यन्निरुप्य |
| २३२ | १ | ब्र मेते | क्रमते |
| २५० | १२ | मध्यात | मध्यात् |
| २५२ | १ | च्चिर्व्वैतेन | च्चिर्व्वतेन |
| २५४ | २१ | खल्वतत् | खल्वेतत् |
| २६० | १७ | च्चिरवदध्यात | च्चिरवदध्यात् |

# शुद्धिपत्रम्।

| पत्रे। | पङ्क्तौ। | अशुद्धं। | शुद्धं। |
|---|---|---|---|
| २१० | २० | मेखलाम.. .. .. | मेखलाम् |
| २१२ | ४ | निशि .. .. .. | शिनि |
| २२३ | १ | नात्र .. .. .. | 'नात्र |
| २२३ | १ | 'उपवेशनात् .. .. | उपवेशनात् |
| २२७ | १४ | कमण्डलु .. .. .. | कमण्डलु' |
| २३१ | ७ | सक्तन्निरूप्य .. .. | सक्तन्निरुप्य |
| २३२ | १ | व्र मेते .. .. .. | क्रमते |
| २५० | १२ | मध्यात .. .. .. | मध्यात् |
| २५२ | १ | त्रिर्व्वैतेन .. .. .. | त्रिर्व्वैतेन |
| २५४ | २१ | खल्वतत् .. .. .. | खल्वेतत् |
| २६० | १७ | त्रिरवदध्यात .. .. | त्रिरवदध्यात् |

# शुद्धिपत्रम् ।



| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १६ | २२ | पुरुषार्थं | पुरुषार्थं |
| २८ | २ | कल्यते | कल्प्यते |
| ३९ | १५ | वद्द | वद्ध |
| ४२ | २१ | प्रमाणिकी | प्रामाणिकी |
| ४३ | ३ | मध्यसातुम् | मध्यवसातुम् |
| ४७ | २१ | प्रोष्ठं | प्रौष्ठ |
| ५५ | ३ | वैश्वनर | वैश्वानर |
| ६९ | २ | श्रवणौ | श्रवणे |
| ७७ | १५ | कारणो | कारणे |
| ७८ | १९ | यिना | विना |
| ९० | ६ | श्रुयते | श्रूयते |
| ९० | १८ | जुहुतात् | जुहुयात् |
| ९१ | २ | गृह्य | गृह्य |
| ९१ | ६ | तृष्णी | तूष्णी |
| ९३ | १५ | महायज्ञः | ब्रह्मयज्ञः |
| ९३ | १६ | पुजनम् | पूजनम् |

स्फुटप्रतीयमानानामशुद्धीनां शोधनमनायाससाध्यमेव। तत्प्रदर्शनमनर्थकमित्युपेक्षितम्।

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठा । | पङ्क्तिः |
|---|---|---|---|
| खदं | खेदं | ११२ | १२ |
| सवतो | संवता | ११४ | १ |
| सुष्टु | सुष्ठु (एवंपरत्र) | ११७ | १५ |
| जिष्ण | जिष्णु | १२७ | १८ |
| प्राप्ताङ्गतिः(?) | प्राप्ताङ्गतिः | १४९ | १० |
| चनसा | चनसां | १५० | ११ |
| द्याव्या | द्यावा | १५७ | ५ |
| मुत्ता | मुक्तो | १६१ | ५ |
| स्थापयत् | स्थापयेत् | १६५ | ३ |
| उत्तमया इति J. | उत्तमाया इति J. | १६५ | २० |
| उत्तमाया | उत्तयथा | ,, | ,, |
| इधे | ईधे | १६६ | १० |
| द्विरुषः | द्वीरुषः | ,, | १२ |
| द्वि | द्वी | ,, | १४ |
| मधा | मेधा | ,, | १५ |
| च्क्रेण | च्कुक्रेण | ,, | १७ |
| सोम | सोम- | १६७ | ३ |
| वीर्य्याणि | वार्य्याणि | ,, | ११ |
| इमा नो | इमानो | ,, | १२ |
| रर्जनय | रजनय | ,, | १४ |
| 'आष्टणात्' | 'आ' 'अष्टणात्' | १७१ | १ |
| अभिद्युम्नं | अभि द्युम्नं | ,, | २२ |
| 'उक्थेग्र' | 'उक्थ्य्र उक्थे' | १७२ | ७ |
| दव | देव | १७४ | २२ |
| विधि | विनि | १७५ | ८ |
| सधि | सधिः | १७६ | ८ |
| समिन्धन्नां | समिन्धतां | १७६ | २० |
| (५।२।२अ०) | (५।२।१अ०) | १७९ | ६ |
| कामाः(१२) | कामा(१२) | १८५ | ११ |
| अग्ने(१२) | अग्ने(१४) | १८६ | ४ |
| ऊर्षां नि | ऊर्षाग्नि | १९२ | १४ |
| युनत्ता- | युनक्ता | २०४ | १ |
| आठो | पाठो | २०५ | २१ |
| (५।१।४अ०) | (५।२।४अ०) | २०७ | १२ |
| प्रफर्व्यंख | प्रफर्व्यांख | २१९ | २२ |
| नाम | र्नाम | २२६ | १३ |
| सनिष्पन्तो | सनिष्यन्ती | ,, | १८ |
| प्राणो | प्र णो | २२७ | १२ |
| नसरिष्याति | न स रिष्याति | ,, | १३ |
| लन | लेन | २२९ | १० |
| ऊर्ज्जाऽनपा | ऊर्ज्जा नपा | २२९ | १७ |
| समुयन्तु | समु यन्तु | २४० | १२ |
| द्विग्भ्या | द्विग्भ्यां | २४२ | १२ |
| माना | मानाः | २४५ | १२ |
| अग्न | अग्ने | २४६ | १२ |
| चरा | चराः | २४७ | १८ |
| वूभिया | वुभिया | २४२ | १४ |
| द्विवि | द्दिवि | २५७ | २१ |
| तन्वति | तन्वन्ति | २६६ | ६ |
| ष्ठको | ष्टको | २६७ | १० |
| वर्त्तते | वर्त्तते' | २७१ | ६ |
| एतच्चा | एतच्च | २७९ | २० |
| तद्दतद | तद्देतद | २८१ | १६ |
| प्रयच्छति | 'प्रति' 'यच्छति' | २८३ | ४ |

(१) नवमानुवाके संहितायां मन्त्रसङ्ख्यावैपरीत्यं टीकासङ्ख्यानुसारेण संशोध्यम् ।

(२) इह स्पष्टतः प्रतीयमाना यन्त्रेचणदोषजा अशुद्धिर्न उद्धृता ।

# शुद्धिपत्रम् ॥

## ग्रन्थस्थस्य

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ । |
|---|---|---|---|
| प्रथमकाण्डं .. .. | प्रथमकाण्डिका .. .. | १ .. | १ |
| दित्यभिप्रायः .. .. | दित्यप्याङ्कः .. .. .. | ७ .. | ५ |
| नाशङ्क्यता .. .. | नाशङ्क्ष्यता .. .. | १२ .. | ७ |
| पुरुषार्थं .. .. | पुरुषार्थं .. .. .. | १६ .. | २२ |
| कुतः .. .. .. | कुतः ? .. .. .. | २१ .. | २१ |
| प्यन्नप्राशनादिषु .. | पि केषुचित् .. .. .. | २३ .. | २,३ |
| काल्यते .. .. .. | कल्प्यते .. .. .. | २८ .. | २ |
| तद्यवस्था .. .. | तत्फलवाद .. .. .. | ३३ .. | १६ |
| पीत .. .. .. | श्वेत .. .. .. .. | ३४ .. | १२ |
| पश्चिमस्यां .. .. | पश्चिमायां (एवं परत्र) .. | ३४ .. | १५ |
| शुक्ला .. .. .. | पीत .. .. .. .. | ३४ .. | २० |
| "सप्त .. .. .. | सप्त .. .. .. .. | ३५ .. | ७ |
| अपिच स्मर्यते .. .. | प्रकारान्तरं ग्रन्थासंग्रहे .. | ३५ .. | ८ |
| इति .. .. .. | × × .. .. | ३५ .. | १४ |
| वह .. .. .. | वह्न .. .. .. .. | ३९ .. | १५ |
| प्रमा .. .. .. | प्रामा .. .. .. .. | ४२ .. | २१ |
| मध्यसातुम् .. .. | मध्यवसातुम् .. .. | ४३ .. | ३ |
| "नस्मादग्रर्था .. .. | तस्मात्—"अग्रर्थाः .. | ४३ .. | १८ |
| "प्राश्चं नीत्वावर्त्य स्थाप_ यन्ति"-इति स्मरणाच्च | × × × × × × .. | ४४ .. | १०,११ |
| तथा नीला आवर्त्य सम्यक भ्रामयित्वा च | × × × .. | ४४ .. | ११,१२ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| प्रौष्ठं | प्रौष्ठ | | |
| ज्यैष्ठैन | ज्यैष्ठ्येन | ४७ | २१ |
| वैम्ब | वैम्बा | ४९ | १ |
| निरूप्य | निरूप्य | ५५ | ३ |
| अग्निहोत्रलक्षणां | × × × (एवं परत्र) | ५५ | ४ |
| लोप | अतिपात | ५८ | १५,१६ |
| जुहुयात् | जुहुयात् प्रायश्चित्तमकृत्वा | ६१ | ५ |
| स्याग्निहोत्र | स्य सायं प्रातर्होम | ६१ | ६ |
| श्रवणौ | श्रवणे | ६७ | १२ |
| मांस्यं स्यात्, संस्पृशेत् | माँस्यँस्यात्, सँस्पृशेत् | ६९ | २ |
| नानव | नानवे | ६९ | २० |
| वाह्यांसः | वाह्याँसः | ७१ | १८ |
| कारणे | करणे | ७२ | ३ |
| पर्यु | पर्यु | ७७ | १५ |
| कंसेन | कँसेन | ७९ | १० |
| तुल्यवद्व | तुल्यवद्धि | ८३ | १९ |
| पुनरग्निहोत्र | पुनः सायंप्रातर्होम | ८४ | २१ |
| त्राद्यमग्निहोत्रहोम | त्राद्यं सायंप्रातर्होम | ८९ | ८ |
| श्रुयते | श्रूयते | ९० | १ |
| जुहुतात् | जुहुयात् | ९० | ९ |
| गर्ह्य | गर्ह्य | ९० | १८ |
| तष्णी | तूष्णी | ९१ | २ |
| महायज्ञः | ब्रह्मयज्ञः | ९१ | ९ |
| पुजनम् | पूजनम् | ९३ | १५ |
| खल्वा | खल्वाचा | ९३ | १६ |
| | | ९६ | ११ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ। |
|---|---|---|---|
| चानुद्य | चानद्य | ९६ | २० |
| आग्नेय्या | आग्नेय्या | ९७ | ७ |
| तथा | "यथा | १०२ | ५ |
| सन्ध्योपासनस्य | सन्ध्योपासनं | १०५ | १८ |
| प्रधान | प्रधान | १०६ | ८ |
| कालभेदे | कालस्वरूपयोर्भेदे | १०६ | १७ |
| भेदे | स्वरूपयोर्भेदे | १०६ | १८ |
| इति। अपिच | इति। स्वरूपभेदस्त्वा-नयोर्निर्मूलकाषं कष-ति तन्त्रताम्। अपिच | १०९ | ६ |
| धार | धारय | १०९ | ७ |
| दन्त | दन्ते | ११२ | १ |
| पांशु | पाꣳशु | ११४ | ८ |
| कामं | कामꣳ | ११६ | १ |
| प्रजापत्या | प्राजापत्या | ११७ | १६ |
| गोतमेन | गौतमेन (एवं परत्र) | ११८ | ११ |
| नवगमाच्च | नवगमात् "यावद्य-जुरनादिष्टान्तान्म-न्त्रान्"-इतिसूत्रणाच्च। | १२६ | २ |
| श्रियते | श्रीयते | १३७ | १८ |
| संस्तूपं | सꣳस्तूपꣳ | १४० | ४ |
| पसलवि | वसलवि (एवं परत्र) | १४१ | १६ |
| तमतं | तमतां | १६२ | १८ |
| रङ्गं | रङ्ग | १६४ | १० |
| ग्रहस्थानां | विभक्तानां | १७७ | २ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ। |
|---|---|---|---|
| कम्बुका | कम्बुका (एवं परत्र) | १८१ | १० |
| न्नम्भाः | न्नमाः | १८८ | १३ |
| मांग्न | मांग्नः | १९२ | २१ |
| "एषावैसमलानामेष्टिः" इति च ब्राह्मणम् | × × × | १९६ | २१ |
| अतएव--"दर्शस्तननिमित्तं वै कालस्वब्रह्मयात्मकः" इति स्त्रीणामावस्थाविषयं स्मरणम्। | × × ×<br>× × ×<br>× × × | २०१ | ११,१२,१३ |
| इति वाक्य | इत्याहिताग्नेर्वि | २२० | ३ |
| कृत्वा पूर्व्वाङ्गरव | कृत्वा अथ परिसमूहनान्तं विधाय, पूर्व्वाङ्गरव — | २२० | १४ |
| 'आवसोः | आवसोः | २२२ | १९ |
| नात्र | 'नात्र | २२३ | १ |
| 'उप | उप | २२३ | १ |
| अन्यापि | अन्या तु | २२८ | ९ |
| ब्रह्मारण्यासाद्य संप्रोच्यच | ब्रह्मस्थापनानन्तरं | २३० | ३ |
| त्यर्थाङ्गभ्यते | त्यर्थः | २३२ | १४ |
| पवित्रान्तर्हितां | पवित्रान्तर्हिताः | २३३ | ७ |
| कतमं | कतमत् | २३३ | १८ |
| पिञ्जल्या | पिञ्जूल्या (एवमन्यत्र) | २४१ | १ |
| वपेत्" | वपेत् | २४१ | १८ |
| आन्वष्टक्य | अन्वष्टक्य | २४७ | १ |
| एतन | एतेन | २५२ | २ |
| इति — | × × | २५३ | ११ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ। |
| --- | --- | --- | --- |
| "नरकाय प्रदातव्योदीपः सम्पूज्य देवताः" । | × × × | २५३ | १२ |
| इति वन्निवृत्तौ | इति निवृत्तौ | २५३ | १३ |
| अन्येतु | अथवा । | २५३ | १४ |
| व्याचक्षते— | × × × | २५३ | १५ |
| खल्वतत् | खल्वेतत् | २५४ | २१ |
| वर्हिष— | वर्हिषः | २६२ | ५ |
| स्तृत्यर्थत्वात् | स्तुत्यर्थत्वात् | २६२ | २२ |
| एच | एव | २६७ | ७ |
| ऐन्द्राग्नन | ऐन्द्राग्नेन | २७२ | ४ |
| स्तृत्यन्तरदर्शनात् | अन्यत्राप्येवं कल्पयितु मुचितत्वात् | २७३ | १७ |
| वाधान | राधान | २७७ | १४ |
| क्षेमादौ | क्षौमादौ | २८६ | ७ |
| सव्व | सर्व्व | २८७ | ५ |
| आददानं | आददानां | २८७ | २० |
| मपीत्वे | मपि त्वे | २८८ | १ |
| सम्भार्य्यमपि | सम्भार्य्यमपि तु | २८८ | २ |
| वरुणा सुराऽरविन्दानी-त्युदकनाम | "धरुणम्, सुरा, अररिन्दानि"—इत्युदकनामसु नैघण्टुककाण्डे | २८९ | १२ |
| चरणेन | अग्निं प्रदक्षिणं कृत्वा चरणेन | २९७ | १ |
| पाणिग्रहे | पाणिग्राहे | ३०२ | १४ |
| वं | वध्व | ३०२ | १८ |
| द | दे | ३०४ | १ |

